५ पुराम.
१

श्रीकृष्णाय नमः॥ हरिरपि भजमानेभ्यः प्रायो मुक्तिं ददाति न तु भक्तिं विहिततदुन्नतसत्रां मधुरे धन्येन ममि
त्वां॥ धन्यानां हृदयानंदपदं संगच्छते मुदा॥ माहात्म्यं मधुरापुर्याः सर्वतीर्थशिरोमणेः॥२॥ तत्रास्याः पा
पहारित्वं आदिवाराहे॰॥ विंशतिर्योजनानां तु माथुरं मम मंडलं॥ यत्र तत्र नरः स्नातो मुच्यते सर्वपातकैः॥ पदे पदे
तीर्थफलं मधुरायां वसुंधरे॥४॥ यत्र तत्र नरः स्नातो मुच्यते घोरकिल्बिषैः॥ सर्वधर्मविहीनानां पुरुषाणां दुरात्मनां
॥५॥ नरकार्त्तिहरा देवी मधुरा पापघातिनी॥ कृतघ्नश्च सुरापश्च चोरो भग्नव्रतस्तथा॥६॥ मधुरां प्राप्य मनुजा मु
च्यंते सर्वकिल्बिषैः॥ सूर्योदये तमो नश्येद्यथा वज्रभयान्नगाः॥७ तार्क्ष्यं दृष्ट्वा यथा सर्पा मेघा वातहता इव॥ तत्व
ज्ञानाद्यथा दुःखं सिंहं दृष्ट्वा यथा मृगाः॥८॥ तथा पापानि नश्यंति मधुरादर्शनात्ततः॥ आद्यापि भक्तिमुक्तस्तु
गत्वा मधुपुरीं नरः॥९॥ ब्रह्महापि विशुद्ध्येत किं पुनस्त्वन्यपातकी॥ मधुरास्नानकामस्य गच्छतस्तु पदे पदे॥
॥१०॥ निराशानि व्रजंते च पापान्यस्य शरीरतः॥ अनुषंगेरा गच्छंति वारिणा ज्यना पि सेवया॥११ मधुरायां तमात्रे

राम
१ म
२

- Title – स्कन्धे (मथुराखण्ड)
- Accession No – Title –
- Accession No –
- Folio No/ Pages – ५५/२२
- Lines-
- Size
- Substance Paper –
- Script Devanagari
- Language – संस्कृत
- Period –
- Beginning – श्री कृष्णायनमः ॥ हरिरपिभजमानेभ्यः प्रायोमुक्तिं
- End – अनुषंगेरा गच्छति मधुरायाम ---
- Colophon-
- Illustrations -
- Source -
- Subject -
- Revisor -
- Author -
1. Remarks- पूर्ण

श्रीकृष्णायनमः॥ हरिरपि भजमानेभ्यः प्रायोमुक्तिं ददाति नतु भक्तिं विहितत दुन्नतस त्रां मथुरे धन्येनमभि
त्वां॥ धन्यानां हृदयानंदपदं संगृह्यते मुदा॥ माहात्म्यं मथुरापुर्याः सर्वतीर्थशिरोमणेः॥ २॥ तत्रास्याः पा
पहारित्वं आदिवाराहे॥ विंशतिर्योजनानां तु माथुरं मम मंडलं॥ यत्र तत्र नरः स्नातो मुच्यते सर्वपातकैः॥ पदे पदे
तीर्थफलं मथुरायां वसुंधरे॥ ४॥ यत्र तत्र नरः स्नातो मुच्यते घोर किल्विषैः॥ सर्वधर्मविहीनानां पुरुषाणां दुरात्मनां
॥ ५॥ नरकार्त्तिहरा देवी मथुरा पापघातिनी॥ कृतघ्नस्य सुरापस्य चौरो भग्नव्रतस्तथा॥ ६॥ मथुरां प्राप्य मनुजा मु
च्यंते सर्व किल्विषैः॥ सूर्योदये तमो नश्येद्यथा वज्रभयान्नगाः॥ ७ तार्क्ष्यं दृष्ट्वा यथा सर्पा मेघा वातहता इव॥ तत्व
ज्ञानाद्यथा दुःखं सिंहं दृष्ट्वा यथा मृगाः॥ ८॥ तथा पापानि नश्यंति मथुरादर्शनात्क्षणात्॥ अद्य पाप क्षितिर्मुक्तस्तु
गत्वा मधुपुरीं नरः॥ ९॥ ब्रह्महापि विशुद्ध्येत किंपुनस्त्वन्यपातकी॥ मथुरास्नानकामस्य गच्छतस्तु पदे पदे॥
॥ १०॥ निराशानि व्रजंते च पापान्यस्य शरीरतः॥ अनुषंगेण गच्छंति वारिणा ज्येनापि सेवया॥ ११ मथुरायातमात्रे

राम
१

पुरायां कृतं पापं मथुरायां प्रणश्यति ॥ ज्ञानतोऽज्ञानतो वापि यत्पापं समुपार्ज्जितं ॥ सुकृतं दुष्कृतं चापि मथुरायां प्रणा
श्यति ॥ यत्र क्षेमेन संचीर्णं क्रीडितं च यथासुखं ॥२५॥ चक्रांकितपदोतेन स्थानेवृत्तमये प्रभुं ॥ यथादिव्या पुरी देवि
नित्यकालं सुगोपिता ॥२६॥ भक्तात्वं मम शिष्या च कथिता ते वसुंधरे ॥ न मया कथितं देवि वृत्तान्तं स्वमहात्मनः
॥२७॥ रुद्रस्य न मया पूर्वं कथितं च वसुंधरे ॥ मया सुगोपितं ह्येतद् गुह्याद्गुह्यतरं परं ॥२८॥ पाद्मे पातालखंडे
बहुजन्मानि पापानि संचितानि निवर्त्तते ॥ मथुराप्रभवं पापं नश्यति स्मरणमात्रतः ॥२९॥ वायुपुराणे ॥ मथुरायां
कृतं पापं मथुरायां प्रणश्यति ॥ धर्मार्थकाममोक्षाख्यं स्थित्वा तत्र लभेन्नरः ॥३०॥ प्रारब्धपापहरित्वं ॥ पाद्मे पातल
खंडे ॥ अन्यत्र दशभिर्वर्षैः प्रारब्धं भुज्यते तु यत् ॥३१॥ किल्विषं तन्महादेवि माथुरे दशभिर्दिनैः ॥ सर्वतीर्थाधि
कत्वं ॥ आदिवाराहे ॥ न विद्यते च पाताले नांतरिक्षे न मानुषे ॥३२॥ समं तु मथुराया हि प्रियं मम वसुंधरे ॥ श्रीधरणी
प्रश्नः ॥ नैमिषं पुष्करं चैव पुरी वाराणसी तथा ॥ एता हित्वा महाभाग मथुरां किं प्रशंससि ॥ श्रीवाराहदेवोत्तरं ॥ मथु
रेति सुविख्यातमस्ति क्षेत्रं परं मम ॥३३॥ सुरम्या च सुप्रशस्ता च जन्मभूमिः प्रिया मम ॥ सर्वेषां देवतीर्थानां माथुरं

त्तपापं त्यक्त्वा दिवं व्रजेत् ॥ नामापि गदितं तामस्याः सदैवत्वेन सः क्षयः ॥ १२ ॥ सदा कृतयुगं चात्र सदा चैवोत्तरायणं ॥ यः श्र
णोति वराराहे माथुरं मममंडलं ॥ १३ ॥ अन्येनोच्चारितं श्रुत्वा सोपि पापैः प्रमुच्यते ॥ त्रिरात्रमपि ये तत्र वसंति मनुजा
मुने ॥ १४ ॥ तेषां पुनंति नियतं स्पृशा ब्रह्मरसा रेणवः ॥ पाद्मे पातालखंडे हरीगौरीसंवादे ॥ कृष्णक्रीडाकरं स्थानं य
मुनायास्तटे शुचि ॥ १५ ॥ पुराणा मधुपुरी यत्र सर्वपापप्रणाशिनी ॥ यथा तृणासमूहं तु ज्वलयंति स्फुलिंगकाः ॥ १६ ॥ तथा
महांति पापानि दहते मथुरापुरी ॥ स्कंदे काशीखंडे ॥ हृद्यं मधुवनं प्राप्य यमुनायास्तटे महत् ॥ १७ ॥ आद्यं भगवतः
स्थानं यत्तु रम्यं हरेर्मेधसः ॥ पापोपि जंतुस्तत्प्राप्य निष्पापो जायते ध्रुवं ॥ १८ ॥ अथ पुराणप्रदत्व ॥ आदिवाराहे ॥ यत्पुण्य
मश्वमेधेन यत्पुण्यं राजसूयतः ॥ मथुरायां तदाप्नोति त्रिरात्रयापनाद्भुमी ॥ १९ ॥ विंशतिर्योजनानां तु माथुरं मम मं
डलं ॥ पदे पदेश्वमेधीयं पुण्यं नात्र विचारणा ॥ स्नानेन सर्वतीर्थानां यः स्यात्सुकृतसंचयः ॥ ततोधिकतरं प्रोक्तं मा
थुरं सर्वमंडले ॥ २१ ॥ चतुर्णामपि वेदानां पुराणमध्ययनाच्च यत् ॥ तत्पुण्यं जायते पुंसां मथुरां वदतां सतां ॥ २२ ॥ स्वाद्र
वपापहारित्व ॥ आदिवाराहे ॥ अन्यत्र हि कृतं पापं तीर्थमासाद्य नश्यति ॥ तीर्थे तु यत्कृतं पापं वज्रलेपो भवेदिति ॥ म

प्रमाण

।षष्टिकोटिसहस्राणिषष्टिकोटिशतानिच॥ तीर्थसंख्यातुवसुंधरेमथुरायांमयोदिता॥५२॥ स्कांदेमथुराखंडे॥८

मथुरा क्षेत्रेकुरुक्षेत्रांक्षितिद्रयकोपः॥षट्मासकाम्यसाध्यपते उद्यायांसमंभवेन्नोदिनमेकमाथुरं॥४७॥ नद्वारिका

३ काशिकांचीनमायागदाधरीयस्यसमंनतीर्थं॥ संतर्पितायद्यमुनाजलेनवांछंतितेनोवैपितरःपिंडदानं॥

॥४८॥ अनंतखंडे॥मथुरायांप्रकुर्वंतिपुरीसाधारदर्शदृमं॥येनरास्तेपिविज्ञेयाःपापराशिभिरन्विताः

॥४९॥ श्रीकृष्णाख्यपरंब्रह्मयत्रचिक्रीडसर्वतः॥ तस्यागखिलतीर्थेभ्योऽधिकंयत्तकिमुच्यते॥५०॥ निर्वाण

खंडे॥ तांपुरींप्राप्यमथुरांमदेपांसुरदुर्लभां॥ खंजोभूत्वाथकोवापिप्राणानेवपरित्यजेत्॥५१॥ पातालख

डे॥ नदृष्टामथुरायेनदिदृक्षायस्यजायते॥ यत्रतत्रमतस्यास्यमाथुरेजन्मजायते॥५२॥ असंख्यतीर्थरूपत्वं॥ आ

दिवाराहे॥ खंडे॥ भूमेरजांसिगण्यानाकालेनापिभवेन्नृप॥ माथुरेयानितीर्थानितेषांसंख्यानवर्तते॥५४॥ अथनि

वासत्वोपदेशः॥ पाद्मेपातालखंडे॥ कुरुभोःकुरुभोःवासंमथुरायांपुरीप्रति॥ यत्रगोप्यस्त्वगोविंदस्त्रैलोक्यस

प्रकाशकः॥५५॥ इमेसंसारमग्नाघशिक्षामेकानुमेस्मरण्य॥ यदिच्छसिसुखंसांद्रावासंकुरुमथोपुरे॥५६॥ यदी

च्छेपारसंसारेवहित्रंमाथुरंकुरु॥

रा म

३

परमं महत्॥३५॥कृष्णेन क्रीडितं यत्र तच्च मुद्रं पदे पदे। चक्रांकितं दृश्यते सर्वं कृष्णस्यैव पदेन तु॥३६॥बालक्रीडनरू
पाणि कृतानि सहगोपकैः॥यानि तीर्थानि तान्येव स्थापितानि महर्षिभिः॥३७॥एतत्ते कथितं सारं मया सत्येन सुव्र
ते॥न तीर्थं मथुरायाहि न देवः केशवात्परः॥३८॥वाराहे॥शृणु तत्वेन मे भूमि कथ्यमानं मयाऽनघे॥मथुरेति सुवि
ख्याता यस्मिन् क्षेत्रे प्रिया मम॥३९॥सुरम्या च प्रसन्ना च जन्मभूमिर्मम प्रिये॥भविष्यति वरारोहे द्वापरे संस्थिते यु
गे॥४०॥ययातिनृपवंशे च उत्पत्स्यामि वसुंधरे॥शतानि पंच वर्षाणां तत्र स्थास्यामि निश्चयः॥४१॥स्कंदे मथुराख
ण्डे॥नारदवाक्यं॥ शृणु धर्ममहत्प्राज्ञ यत्त्वं पृच्छसि धर्मवित्॥ गोप्यं सप्तपुरीणां तु मथुरामंडलं स्मृतं॥४२॥द्वात्रिंश
द्वर्षसहस्राणि त्रिंशवर्षशतानि च॥यत्फलं भारते भारे तत्फलं मथुरास्मरन्॥४३॥तथा स्याद्धि वराहे॥ महामाघी प्रया
गे च यत्फलं लभते देवि मथुरायां दिने दिने॥कार्तिक्यां चैव यत्पुण्यं पुष्करे तु वसुंधरे॥४४॥तत्फलं लभते देवि मथुरा
यां जितेन्द्रियः॥षष्टिं वर्षसहस्राणि वाराणस्यां तु यत्फलं॥४५॥तत्फलं लभते देवि मथुरायां क्षणेन हि॥पाद्मे पाताल
खण्डे॥षष्टिवर्षसहस्राणि तीर्थराजेषु यत्फलं॥४६॥तत्फलं लभते देवि मथुरायां दिने दिने॥गोदावरी द्वादशके नरो यः

षांक्कापि गतिर्नास्तितेषांमधुपुरी गतिः॥ पापराशि भिराक्रांतायेदारिद्र्यपराजिताः॥ ६७॥ येषांक्कापि गतिर्ना
स्तितेषां मधुपुरी गतिः॥ श्रुतिस्मृतिविहीनायेशौचाचार विवर्ज्जिताः॥ येषांक्कापि गतिनास्ति येषांमधु
पुरीगतिः॥ ६८॥ येचयोगपरिभ्रष्टायेतयोदानवर्ज्जिताः॥ येषांक्कापि गतिनास्तितेषांमधुपुरीगतिः॥ ६९
पदेपदे समाक्रांतायेविपद्भिरहर्निशं॥ येषांक्कापि गतिर्नास्तितेषांमधुपुरीगतिः॥ ७०॥ सारात्सारतरं स्था
नं गुह्यानां गुह्यमुत्तमं॥ गतिमन्वेषमाणानां मथुरापरमागतिः॥ ७१॥ अथनित्यहरिसन्निधानत्वं॥ आदि
वाराहे॥ मथुरायाः परं क्षेत्रं त्रैलोक्येनहिविद्यते॥ तस्यांवसाम्यहं देवि मथुरायांतुसर्वदा॥ ७२॥ मथुराखंडे
अहोतिमथुराधन्यायत्रसंनिहितोहरिः॥ सर्वेषांयत्रपापानां प्रवेशोपिनविद्यते॥ ७३॥ पाद्मेपातालखंडे॥ अ
होमधुपुरीधन्यायत्रतिष्ठतिकंसहा॥ तत्रदेवोमुनिः सर्वेवासमिच्छंतिसर्वदा॥ ७४॥ श्रीभागवतेतत्रप्रथम
स्कंधे॥ अहो अलंश्लाघ्यतमं यदोःकुलं अहो अलंपुण्यतमं मधोर्वनं॥ यदेषपुंसामृषभः प्रियः श्रियः स्वज
जन्मनाचंक्रमरोनचांचति॥ चतुर्थस्कंधे॥ तत्रातगच्छभद्रंतेयमुनायास्तटं शुचि॥ पुण्यंमधुवनंयत्र

नौकासा प्रेरकः कृष्णो भोगिविपारकारकः ॥५७॥ अहो लोको महानंधो नेत्रयुक्तो न पश्यति ॥ माथुरे विद्यमाने
पि संसृतिं भजते सदा ॥५८॥ मानुषीं योनिमतुलां लब्ध्वा माथुरस्य यो गतः ॥ व्यर्थं वायुर्जितं तेषां न दृष्टा माथुरी पुरी ॥
आदिवाराहे ॥ अहो मते सुदैवं त्वं अहो भाग्यस्य दौर्विध्यं ॥ अहो मोहस्य महिमा मथुरा नैव सेव्यते ॥६०॥ साप
दं संपदं ज्ञात्वा सा पापं कायमुक्तकैः ॥ चपला चापलं चैव मथुरा नाव माश्रयेत ॥६१॥ स्कंदे मथुराखंडे ॥ तत्रैव भ
वतां बंधुपांडवानां सुहृत्सखा ॥ सात्वतानां प्रियः साक्षाद्यादवानां कुलेश्वरः ॥६२॥ कृष्णः कमलपत्राक्षः सोवती
र्णो युधिष्ठिरः ॥ रामेण सहदेवक्यां वसुदेवगृहोत्तमे ॥६३॥ तस्य कर्मार्यनेकानि परिगीतानि सूरिभिः ॥ जातानि मा
थुरे देशे तां पुरीं को न सेवते ॥६४॥ अतएवादिवाराहे ॥ मथुरां च परित्यज्य योऽन्यत्र कुरुते रतिं ॥ मूढो भ्रमति संसारे मो
हितो मम मायया ॥६५॥ स्कंदे मथुराखंडे च ॥ मथुरामपि संप्राप्य योऽन्यत्र कुरुते स्पृहां ॥ दुर्बुद्धेस्तस्य किं ज्ञानमज्ञा
नेन विमोहितः ॥६६॥ अपर्यागति गतिस्त्वं आदिवाराहे ॥ मात्रापित्रापरित्य[illegible] कोपि त्यक्तानि जवं धुभिः ॥६७॥ ये

यत्रतत्रमृतोदेविमुक्तिंयातिनचान्यथा॥काश्यादिपुर्य्योयदिसंतुलोकेतासांमध्येमथुरैवधन्या॥याज
न्मभौंजीव्रतमत्युदाहैर्नरांचतुर्थीविदधातिमोक्षं॥१॥नयोगयोगतिर्लभ्यामन्वंतरशतैरपि॥अन्यत्रे
लयासात्रलभ्यतेमत्प्रसादतः॥२॥नपापेभ्योभयंतत्रनमलेयत्रवैयमात्॥नगर्भवाससमीयत्रतत्रदेत्रे
कोनसंश्रयेत्॥३॥विनासांख्येनयोगेनविनास्वात्मविचिंतनं॥विनाव्रततपोदानैःश्रमोवैप्राणिना
स्मिह॥४॥कृमिकीटपतंगाद्यामथुरायांमृताहिये॥कूलात्पतंतियेवृक्षात्तेपियांतिपरांगतिं॥वार
ह॥विंशद्योजनविस्तारोमथुरायाश्चमंडलः॥यत्रप्राणान्विमुंचंतिसिद्धायांतिपरांगतिं॥पाद्मेप
तालखंडे॥चांडालमूककरणीशांजीवहिंसारतस्यच॥मथुरापिंडपातेनपुनर्जन्मनविद्यते॥१०॥
प्रारा॥स्पास्निष्टकचितेश्मशानेव्योप्तिमंचके॥अहूलेवामृतोदेविमाथुरेमुक्तिमाप्नुयुः॥८॥वा
मनपुराणे॥मथुरातीर्थमतुलंविख्यातंलोकसत्कृतं॥यत्रकृष्णस्तुगोपालैःसमंक्रीडितवान्जले॥
॥९॥तत्रगत्वानरोब्रह्मन्मुच्यतेसर्वपातकैः॥सौरपुराणे॥अस्तीहमथुरानामत्रिषुलोकेषु

७६

सानिध्यं नित्यदा हरेः॥श्रीदशमे॥राजधानी ततः साभूत्सर्वयादवभूभुजां॥मथुरा भगवान्यत्र नित्यं सन्निहितो हरिः
॥८०॥श्रीविष्णुपुराणे प्रथमेंशे॥हत्वा च लवणं रक्षो मधुपुत्रं महाबलं॥शत्रुघ्नो मथुरा नाम पुरीं यत्र चकार
सः॥८८॥वायुपुराणे॥चत्वारिंशद्योजनानां ततस्तु मथुरा स्मृता॥यत्र देवो हरिः साक्षात्स्वयं तिष्ठति सर्वदा॥८९॥अथ श्रीभगवत्कृपालभ्यत्वं आदिवाराहे॥न तत्तु श्रेयैर्न तद्दानैर्न तपोभिर्न तज्जपैः॥न लभ्यं विविधै
र्यज्ञैर्लभ्यं मदनुभावतः॥९०॥श्रीविष्णोः कृपया न्यूनं तत्र वासो भविष्यति॥विना विष्णोः प्रसादेन क्षणमेकं
न तिष्ठति॥९१॥पाद्मे उत्तरखंडे॥हरौ येषां स्थिरा भक्तिर्भूयसी येषु तत्कृपा॥तेषामेव हि धन्यानां मथुरा
यां भवेद्रतिः॥९२॥अथ श्रीभगवद्ध्यानादिलभ्यत्वं पाद्मे निर्माणखंडे॥यदा विष्णुस्तपआदिना जनाः॥
भास्य पध्यानधनानिरंतरं॥९३॥ते देवपश्यंति मथोत्तमां पुरीं न चान्यथा कल्पशतैर्द्विजोत्तमः॥अथ मो
क्षप्रदत्वं आदिवाराहे॥या गतिर्योगयुक्तस्य वसत्सुजनस्य मनीषिणः॥सा गतिः मथुरायां नरस्य च॥तीर्थे
क्षेत्रे गृहे चापि त्यक्तं पापि यद्वद्वु॥सागतिस्त्यजतः प्राणान्मथुरायां नरस्य च॥तीर्थे चैव गृहे चापि चत्वरे पथि चैव

न्द॥ भक्तीछ्छो भक्तिदा कस्तां मथुरां नाश्रयेद्बुधः॥ तत्रैव पानार्चडे पार्वती प्रश्नः॥ ८ कोद्भुतस्त्वन्महिमाम
थुरा या जयाधर॥ मुनेर्भुवो वा सरितः प्रभावः केन वा विभो॥ कृष्णस्य वा प्रभावो यं संयोगस्य प्रतापवान्॥ श्रीम
हादेवो तरं॥ नभ भूमिका प्रभावस्य सरितो वा वरानने॥ ऋषीशां न प्रभावस्य प्रभावो विष्णु तारके॥ तथा पारक
चित्स्थक्ते रूमे तत्पदं कारके॥ तद्देवस्य गुणोद्दिवि प्रभावो येन वर्त्तते॥ श्रीकृष्णमहिमा सर्वस्त्रिच्छक्ते पैः प्र
वर्त्तते॥ तारकं पारकं तस्य प्रभावो यमनास्तः॥ १३१॥ तारकाज्जायते मुक्तिः प्रेमभक्तिस्तु पारकात्॥ तत्रैव श्री
भगवद्वाक्यं॥ ८ औ मंत्रानुमेनाम्नी मदीयप्रासावल्लभे॥ नानानामानि मंत्रांश्च तन्मध्ये सारमुच्यते॥ अजा
तमथवाज्ञाते तारकं जपते यदि॥ यत्र तत्र भवेन्मृत्युः काश्यां तु फलमादिशेत्॥ वर्त्तते यस्य जिह्वाग्रे स पुमां
ल्लोकपावनः॥ छिनत्ति सर्वपापानि काशीवासफलं लभेत्॥ इति तारकमंत्रो यं यस्तु काश्यां प्रवर्त्तते॥ सए
व माथुरे देवि वर्त्तते च वरानने॥ अथ पारकमुच्येत यथा मंत्रं यथावलं॥ पारकं यत्र वर्त्तेत ऋद्धिसिद्धिसमाग
मः॥ पूज्यो भवति त्रैलोक्ये शतायुर्जायते पुमान्॥ अष्टसिद्धिसमायुक्तो वर्त्तते यत्र पारकं॥ पारकं यस्य जिह्व

विश्रुता ॥ कृष्णपादरजोमिश्रवालुकापूतवीथिका ॥ पवनेननरस्तस्मान्मुच्यते जन्मबंधनात ॥१३॥ मथुरा
खंडे ॥ मथुरायां वसिष्यामि यास्यामि मथुरामहं ॥ इति यस्य मतिर्बुद्धिः सोपि बंधाद्विमुच्यते ॥ विष्णुलोकप्रद
त्वं ब्रह्मांडे ॥ येन स्पंदत्यच्युते देवं माथुरे देवकीसुतं ॥ ते विष्णुलोकमासाद्य न च्यवंते कदाचन ॥ यात्रां करोति कृ
ष्णस्य श्रद्धया यः समाहितः ॥१४॥ सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ पाद्मे पातालखंडे ॥ स्त्रियो म्लेच्छाश्च
शूद्राश्च पशवः पक्षिसरीसृपाः ॥१५॥ मथुरायां मृता ये च विष्णुलोकं स गच्छति ॥ सर्वे दग्धाः प्रभुस्ताः पावकांबु
विनाशिताः ॥१६॥ लब्ध्वा पंचत्वमाये च माथुरे हरिलोकगाः ॥ आदिवाराहे ॥ कल्पग्रामेशा किं तस्य वाराणस्यां
मथुरायां समासाद्य यः कश्चिन्म्रियते नरः ॥१८॥ अ
च वासुभे ॥१९॥ मथुरायांतु यत्पुण्यं तस्य पुण्यफलं श्रृणु ॥ मथुरायां समासाद्य यः कश्चिन्म्रियते नरः ॥ अ
पि कीटपतंगो वा जायते स चतुर्भुजः ॥ अथवा सर्वाभीष्टप्रदत्वं ॥ ब्रह्मांडपुराणे ॥ सत्यं सत्यं मुनिश्रेष्ठ क्वेशप
यपूर्वकं ॥ सर्वाभीष्टप्रदं नान्यन्मथुरायाः समं क्वचित ॥ स्कंदे मथुराखंडे ॥ देवश्चपालोमहादेवो वर्त्ततेयत्रस
वीदा ॥२०॥ यत्र विश्रांतितीर्थं च तत्र किं दुर्लभं फलं ॥ पाद्मोत्तरखंडे ॥ त्रिवर्गदा कामिनां या मुमुक्षूणां च मो

विष्णुभक्तिप्रदत्वं ॥ पाद्मेउत्तरखंडे ॥ अन्येषुपुराणक्षेत्रेषुमुक्तिरेवमहाफलं ॥ मुक्तेप्रार्थ्याहरेर्भक्तिर्मथुरा
यांतुलभ्यते ॥ त्रिरात्रमपियेतत्रवसंतिमनुजामुने ॥ हरिर्दृष्टास्तुखंतेषांमुक्तानामदुर्लभं ॥ ब्रह्मांडपुराणे
त्रैलोक्यवर्त्तितीर्थानांसेवनाद्दुर्लभाहिया ॥ परानंदमयीसिद्धिर्मथुरास्पर्शमात्रतः ॥ स्कांदेमथुराखंडे ॥ स्मरं
तिमथुरांयेचमथुरेशंविशांपते ॥ सर्वतीर्थफलंतेषांस्याद्भक्तिर्हरौपरे ॥ अथस्वतःपरमफलत्वं ॥ पाद्मेपाता
लखंडे ॥ अहोमधुपुरीधन्यावैकुंठाच्चगरीयसी ॥ दिनमेकंनिवासेनपुनर्जन्मनविद्यते ॥ एवंसप्तपुरीणांतुस
र्वोत्कृष्टंतुमाथुरं ॥ श्रूयतांमहिमादेविवैकुंठभुवनोत्तमाः ॥ आदिवाराहे ॥ भूर्भुवःस्वस्तलेनापिनपातालत
लेमलं ॥ नोर्द्ध्वलोकेमयादृष्टंतादृक्क्षेत्रंवसुंधरे ॥ वाराहपुराणे ॥ लाभानांमथुरालाभो ज्ञानानांज्ञानमुत्त
मं ॥ प्रीतीनांपरमाप्रीतिर्गतीनांगतिरुत्तमा ॥ रहस्यानांरहस्यंचक्रियाणांचमहाक्रिया ॥ एतन्मरणकालेपि
स्मर्त्तव्यंमनसापिच ॥ यदीछेत्परमांसिद्धिंसंसारस्यचमोक्षणं ॥ अथश्रीमथुरामंडलसीमाज्ञानं ॥ आदिवारा

ता१

ग्रंतस्य संतोषवर्त्ति॥ परिपूर्णो भवेत्कामः सत्यसंकल्पता तथा॥ द्विविधं प्रेमभक्तिस्तु स्मृतं दृढं तथैव च॥ अखंडपर
मानंदस्तज्ञतो ज्ञेयलक्षणाः॥ अप्राप्तः क्वचिन्नित्यं क्वचित्प्रेमातिविह्वलः॥ क्वचित्तस्य महन्मूर्छा मद्गुणो गीय
ते क्वचित॥ अथ प्रपंचातीतत्वं॥ अन्यैव काचित्सा सृष्टिर्विधातुर्व्यतिरेकिणी॥ न यत्र देवगुणान्व कूर्मीस्व
रोपीश्वरोपतः॥ स्कांदे मथुराखंडे॥ तन्मंडलं माथुरं हि विष्णुचक्रोपरि स्थितं॥ पद्माकारं सदा तत्र वर्त्तते शा
श्वतं नृप॥ पाद्मे पातालखंडे॥ ऋषिर्माथुर नामात्र तपः कुर्वति शाश्वते॥ ततोऽस्य माथुरं नामाभवदाघक्रि
पायुतं॥ तत्रैव निर्वाणखंडे॥ नित्यां मे मथुरां विद्धि वनं वृंदावनं तथा॥ यमुनां गोपकन्याश्च तथा गोपालबाल
कान्॥ २४७॥ अत्रेण जानंति नरा दुराशयाः पुरीं मदीयां परमां सनातनीं॥ सुरेंद्रनागेंद्रमुनींद्रसंस्तुतां मनो
रमां तां मथुरां पराकृतिं॥ देवत्रयरूपत्वं॥ पाद्मे पातालखंडे॥ मकारे च उकारे अकारे चांतसंस्थिते॥ माथुरः श
ब्दनिष्पन्नः अकारस्य ततः समः॥ महारुद्रो मकारः स्यादुकारो विष्णुसंज्ञकः॥ अकारोंतस्तु ब्रह्मास्यात्त्रिप
दं माथुरं भवेत॥ तदावरश्रेष्ठ छत्राः सत्ययवाभवतत्ततः॥ सा त्रिदेवमयी मूर्त्तिर्माथुरं तिष्ठते सदा॥ अथ श्री

माथुरा
८

एवमेव सर्वा सु
देवर्षिवायतनं महत्॥ एतेन यावावर मवधीकृत यशोकरी वटेश्वर पर्यंतं मथुरामंडलं ज्ञेयं॥
दिव्यपितपज्ञेयं॥ विंशति योजनानामल्केपि वसुतीर्थं वतया विशेषः॥ मथुराखंडे॥ मथुरामंडलं तद्धि योजन
नांतु द्वादश॥ यत्र तीर्थ सहस्राणि कृत्स्नरामकृतानि च॥ तत्रापि विशेषं॥ आदिवाराहे॥ इंद्रपद्मं महाभागे सर्वे
षां मुक्तिदायकं॥ काशिकायां स्थितो देवि केशवः क्लेशनाशनः॥ काशिकायां मृता ये तु ते नरा मुक्तिभागिनः॥
पत्रमध्ये मृताये च तेषां मुक्तिर्व[illegible] सुंधरे॥ पश्चिमेन हरिं देवं गोवर्द्धननिवासिनं॥ दृष्ट्वा तं देवदेवेशं किंम
नः परितप्यते॥ उत्तरे स्यातु गोविंदं दृष्ट्वा देवं परं शुभं॥ नासौ पतति संसारे यावदाहृतसंप्लवं॥ विश्रांति संज्ञ
कं देवं पूर्वपत्रे व्यवस्थितं॥ यं दृष्ट्वा तु नयो याति मुक्तिं नास्त्यत्र संशयः॥ दक्षिणे न तु मां विद्धि प्रतिमां दिव्यरू
पिणीं॥ मरुकायां स्वरूपां च केशवाकार सेनिभं॥ मां दृष्ट्वा मनुजो देवि विष्णुलोके स मोदते॥ अथात्र काल
विशेषेनिवादि फलं॥ तत्र ज्येष्ठे॥ आदिवाराहे॥ ज्येष्ठस्य शुक्ल द्वादश्यां स्नात्वा तु नियतेंद्रियः॥ मथुरायां ह
रिं दृष्ट्वा प्राप्नोति परमां गतिं॥ चातुर्मास्ये॥ आदिवाराहे॥ पृथिव्यां यानि तीर्थानि आसमुद्रसरांसि च॥ १८२॥॥
गच्छति द्वादशमयी द्वादशारस्य संयुता॥ तत्रापि मथुरा देवी सर्वसिद्धिविधायनी॥ अत्रापि पद्माकृते विशेषं॥ ८

राम
८

त ३

हे॥ विंशतिर्योजनानां तु माथुरं मम मंडलं॥ यथा च पद्मे यमुनामहात्म्ये॥ रम्यम सरसां स्थानं यस्मिंश्चंचलतां गतः
यायावरः पुरा विप्रस्तपस्वी विजितेंद्रियः॥ कश्चित्कालप्रतप्तं तमिंद्र शायाग्निनार्दितं॥ स्पृस्पा वारिकरोन्नेमं मोच
यित्वाघपाकात॥ विमानेनार्कवर्णेन प्रापयत्तं सुरालयं॥ पूज्यमानाद देवैरा चैवैर्व्वन प्रस्थैर्यथाविधि॥ माथुरा
मंडलं प्राप्ता तस्माद्देवर्षिसेविता॥ पावयित्वा कुरून्देशान् शूरसेनान् समाविशत॥ वनानि द्वादश स्फीता
नि स्फीतग्रामसंपदा॥ क्रमाद्विश्रांतिमासाद्य विश्रांता तत्केशवालये॥ सुदर्शनोपरिगता गतश्रमसमीपगा॥ इ
त्युपक्रम्य॥ आश्लिष्टा वासुदेवेन सत्कृत्याभ्यर्चितापनी॥ अनुज्ञाता गता पुरापास्तु पुरांपश्चौव्य माश्रमं॥ संप्राप्त
पुरापसलिलास्तपुरापंरेरा काश्रमं॥ दीप्तिते मत्रैरामो भूत्सर्वदत्रदयाध्वरे॥ ततः प्रयाता यमुना भरतस्याश्रमे
धिकं॥ इष्ट्वा शाकुंतलेयेन सारं गैर्यत्र सप्तभिः॥ स्यपसप्ततिभिर्मेध्यैः सोमेनेंद्रोप्यमाद्यत॥ ततः प्रत्यङ्मुखी भूत्वा सं
प्राप्ता सौकरीं पुरीं॥ यस्यां धरां समुद्धर्तुं मुत्पन्नश्चादि सूकरः॥ ततस्तां नगरीं सौरीं भूत्वा प्रत्यङ्मुखी पुनः॥
परिक्रम्य विनिष्क्रांता जिह्मगत्येव पन्नगी॥ ततः सा साश्रूरसेनेभ्यः पांचालानां विमुक्तिदा॥ दृष्ट्वा काश्रममापे

मथुरा

यत्रार्चितः स्वकं रूपं भक्तेभ्यः संप्रयच्छति ॥२०९॥ भक्तिं मुक्तिं हरिर्दद्यादर्चितोन्य
त्र मथुरायां न संशयः ॥ यत्रार्चितः स्वकं रूपं भक्तेभ्यः संप्रयच्छति ॥ भक्तिं मुक्तिं हरिर्दद्यादर्चितोन्य
त्रसेविनां ॥ भक्तिं न च ददात्येष यतो वश्यकरी हरेः ॥ सा त्वंजसा हरेर्भक्तिर्लभ्यते कार्त्तिके नरैः ॥ मथुरायां स
कृदपि श्रीदामोदरपूजनात् ॥ मंत्रद्रव्यविहीनं च विधिहीनं च पूजनं ॥ मन्यते कार्त्तिके देवो मथुरायां मदर्चनं
यस्य पापस्य युज्येत मरणांतादि निष्कृतिः ॥ तच्छुद्ध्यर्थमिदं प्रोक्तं प्रायश्चित्तं सुनिश्चितं ॥ कार्त्तिके मथुरा
यां वै श्रीदामोदरपूजनं ॥ सुलभा मथुरा लोके प्रत्यब्दं कार्त्तिकस्तथा ॥ तथापि संसरंतीह नरा मूढा भवांबु
धौ ॥ किं यज्ञैः किं तपोभिर्वा तीर्थैरन्यैश्च सेवितैः ॥ कार्त्तिके मथुरायां चेदर्च्यते राधिकाप्रियः ॥ यानि सर्वाणि
तीर्थानि नद्यो नद्यः सरांसि च ॥ कार्त्तिके निवसंत्यत्र माथुरे सर्वमंडले ॥ परोपहासमुद्दिश्य कार्त्तिके हरिपूज
या ॥ मथुरायां लभेद्भक्तिं किं पुनः श्रद्धया नरः ॥ तत्रैव धूम्रकेशं प्रति यमवाक्यं ॥ तस्मान्मया त्वमत्र स्पष्टः परं
किंचिन्न विद्यते ॥ कार्त्तिके मथुरायां च श्रीदामोदरपूजनात् ॥ न चात्र संशयः कार्यः ईशितत्वमिदं हरेः ॥ राज
रिः कस्यचिद्धत्वा सर्वस्वं चेत्प्रयच्छति ॥ वरस्मै तस्य कस्तत्र नियंता स्यात्प्रभो यथा ॥ अयं सर्वेश्वरः श्रीमान

राम

मथुरायां गमिष्यंति मयि सुप्ते वसुंधरे ॥ सप्तद्वीपेषु तीर्थानि पुण्यान्यायतनानि च ॥ मथुरायां गमिष्यंति सुप्ते चै
व जनार्दने ॥ चतुरो वार्षिकान्मासान्मधुपुर्यां वसाम्यहं ॥ सर्वाणि तत्र तीर्थानि वसंति विविधानि च ॥ अथ भ
पदे जन्माष्टम्यां ॥ वाराहे ॥ जन्माष्टमीदिने तत्र यो नरो मां प्रपश्यति ॥ जन्मकोटिकृतं पापं तत्क्षणादेव नश्य
ति ॥ तथा च ॥ भाद्रेमासि मम चाष्टम्यां यः करोति ममार्चनं ॥ सर्वपापं परित्यज्य मम स्थानं स गच्छति ॥ सर्वतप्तं त
पस्तेन सर्वदानं च तेः कृतं ॥ यत्कृतं मथुरां गत्वा भाद्रेष्टम्यां वसुंधरे ॥ स्नात्वा विश्रांतितीर्थे तु पूजनं मेव लो
कने ॥ विशेषतः कार्त्तिके ॥ पाद्मे कार्त्तिकमाहात्म्ये नारदवाक्यं ॥ यत्र कुत्रापि देशे यं कार्त्तिकः स्नानदानतः ॥ अग्नि
होत्रसमफलः पूजया तु विशेषतः ॥ कुरुक्षेत्रे कोटिगुणो गंगायामपि तत्समः ॥ ततोधिकः पुष्करे स्याद्द्वारकायां तु
भार्गव ॥ कृष्णसालोक्यदो मासः पूजास्नानेषु कार्त्तिकः ॥ अन्याः पुर्यस्तत्समाना मुनये मथुरां विना ॥ दामोद
रत्वं हि हरेस्तत्र वातसीद्वतः किल ॥ मथुरायां ततस्तूर्जो वैकुंठप्रीतिवर्द्धनः ॥ कार्त्तिके मथुरायां वै परमावधि
रिष्यते ॥ यथा माघे प्रयागः स्याद्वैशाखे जाह्नवी यथा ॥ कार्त्तिके मथुरा सेव्या ततो त्कर्षः परो नहि ॥ मथुरा
यां नरैरूर्जे स्नात्वा दामोदरोर्चितः ॥ कृष्णरूपा हि ते ज्ञेया नात्र कार्या विचारणा ॥ दुर्लभः कार्त्तिको वि

तथा भविष्यं॥ भीष्मपंचदिने प्राप्ते माथुरे मंडले हरेः॥ निद्राछेदकरे पुरायपादुके चावलोकयेत॥ अथ मधु
वनांतर्गत मधुपुरी महात्म्यं॥ स्कांदे मथुराखंडे॥ मधोर्वनं प्रथमतो यत्र वै मथुरापुरी॥ मधुदैत्यो हतो यत्र ह
रिणा विश्वमूर्त्तिना॥ तत्रैव भगवद्दासस्त्राविर्भावे हरेर्नृप॥ विश्रामस्थ हरेस्तत्र देवानां च नृपोत्तम॥ यो वै म
धुवने स्नाति यमुनाजलमाश्रितः॥ सर्वतीर्थेषु सस्नातस्तत्फलं लभते ध्रुवं॥ सर्वेषां नृप सिद्धि स्यात्तस्मिन्
मधुवने नृणां॥ तपसा भक्तियुक्तेन स्नानमात्रेण कर्म्मणा॥ अहो मधुवनं पुण्यं यत्र रामः सहानुजः॥ करोति
कर्मलोकानां हिताय च मनीषिणां॥ मर्दितो यत्र कुंभेन सोग्रसेनात्मजोसुरः॥ पावितः स्पर्शमात्रेण गतिं नी
तस्य योगिनां॥ तस्मिन्मधुवने राजन्दुर्घटं किं हरिप्रिये॥ वक्तुं नामानि तीर्थानां शक्यते न मया धुना॥ तस्मि
न्मधुवने यानि माहात्म्यं च नृपोत्तम॥ अहो मधुवनं दृष्टं कृतं वा तत्सुसेवितं॥ स्थितं वा येः सुरचितं धन्यास्ते
नृपमानवाः॥ किं विघपावा तपसा किं ज्ञानेन च कर्मणा॥ येषां वासो मधुवने नाभून्नृपनराधमाः॥ आदि
वाराहे॥ तत्र मध्ये तु तत्स्थानमर्द्धचंद्रव्यवस्थितं॥ तत्रैव वासिनो लोका मुक्तिं यांति न संशयः॥ अर्द्धचंद्रेतु

न्यथाकर्तुमीश्वरः॥ अल्पमल्पं भुवि कुरुते बहु नु कुं च मन्यते॥ तत्रापि प्रबोधन्याम तिविशेषः॥ पाद्मे कार्त्तिकमाहात्म्ये॥
तावद्गर्जंति तीर्थानि वाजिमेधादयो मखाः॥ मथुरायां प्रिया विष्णोर्यावन्नायाति बोधिनी॥ संसारदवतप्तानां का
मसौख्यपिपासिनां॥ श्रीकृष्णपादपद्मस्य सान्निध्यं शीतलं गृहं॥ भवयांथजनानां वै प्रापिके यं प्रबोधनी॥
कथं न सेव्यते मूढै मथुरायां किमन्यतः॥ तथा च॥ मथुरायां तु किं वाच्यं जागरे हरिसंनिधौ॥ कार्त्तिके बोधि
नीं प्राप्य ततः श्रेयः परं नहि॥ राजाम न्यत्र संत्यज्य स्फीतं निहतकंटकं॥ कार्त्तिके मथुरायां वै कोमुधां जागरं
चरेत॥ अथ द्वादश्यां विष्णुपुराणे॥ ऊर्ज्जस्य शुक्लद्वादश्यां स्नात्वा वै यमुनाजले॥ मथुरायां हरिं दृष्ट्वा प्राप्नो
तिपरमां गतिं॥ अथ भीष्मपंचके॥ पाद्मे भीष्मं प्रति श्रीकृष्णवाक्यं॥ त्वया कृते व्रते पश्चात्ख्यास्यते भी
ष्मपंचकं॥ यत्वत्र कर्मभूमौ मेकरिष्यंति महाव्रतं॥ मथुरायां तु गांगेय तेषां भक्तिः करे स्थिता॥ सार्वभौमपि
द्रपदं ब्रह्मलोकं तथाऽ दायं॥ योगसिद्धिश्च मुक्तिं च प्रीतो यच्छामि सर्वशः॥ दुर्लभो भक्तियोगो मे मम वश्यवि
धायकः॥ कार्त्तिके मथुरायां च व्रतेनान्येन लभ्यते॥ पुराणांतरे च॥ सर्वाभीष्टप्रदं प्रोक्तं माथुरे भीष्मपंचकं॥

मथुरा
११

जयोपवासेनिरतो मथुरायां षडानन॥ जन्मस्थानं समासाद्य स
सः॥ अथ श्रीजन्मस्थानमहात्म्यं॥ स्कांदे॥ जयोपवासेनिरतो मथुरायां षडानन॥ सकृत्स्वविक्षःश्रीकृष्णं ते
र्व पापैः प्रमुच्यते॥ अथ कार्त्तिके॥ पाद्मे॥ कार्त्तिके जन्मसदने केशवस्य च येनराः॥ ततोधिकं न कर्त्तव्यं लोकेकिं
यांति परमव्ययं॥ तत्रैव प्रबोधन्यां॥ एकैवैकादशी कृष्ण जन्मगेहे कृतानरैः॥ संसारमोहस्वप्नांते सदाजाग्रति जाग्रति॥ अन्यत्रा
चनविद्यते॥ रात्रौ जागरणं तत्रैव श्रीत्वा कुर्वंति ये नराः॥ संसारमोहस्वप्नांते सदाजाग्रति जाग्रति॥ अथ श्रीकेशवस्य मा
पिप्रिया विष्णो जीजरेस्यात्प्रबोधनी॥ किंपुनर्मथुरायां सा ततो वै जन्मसद्मनि॥ अथ श्रीकेशवस्य मा
हात्म्यं॥ आदिवाराहे॥ प्रदक्षिणा कृता तेन सप्तद्वीपा वसुंधरा॥ प्रदक्षिणा कृता येन मथुरायां तु केशवे॥
इह जन्म कृतं पापमन्यजन्मकृतं च यत्॥ तत्सर्वं नश्यते शीघ्रं कीर्त्तने केशवस्य च॥ तत्रैव सुप्तोत्थितकेशव
स्य दर्शनफलं॥ आदिवाराहे॥ सुप्तोत्थितं हरिं दृष्ट्वा मथुरायां वसुंधरे॥ न तस्य पुनरावृत्तिर्जायते स चतुर्भु
जः॥ पाद्मे कार्त्तिकमाहात्म्ये॥ सप्तमुत्थाय गोविंदं तन्मुखं वसुतिका गृहे॥ पश्यति कृत पुरापा यत्तेषां किम
ऽपमुच्यते॥ विष्णुपुराणे षष्ठेंशे॥ ज्येष्ठस्य शुक्ल द्वादश्यां स्नात्वा वै यमुना जले॥ मथुरायां हरिं दृष्ट्वा

राम
११

यः स्नानं करोति नियताशनः ॥ तेनैव चात्मया लोकाः प्राप्ताश्चैव न संशयः ॥ अर्द्धचंद्रे मृता देवि मम लोकं व्रजंति ते
अन्यत्र तु मृता देवि अर्द्धचंद्रे कृतक्रियाः ॥ तेपि मुक्तिं गमिष्यंति दाहादिकरणोद्यताः ॥ यावदस्थीन्यर्द्धचंद्रेय
स्य तिष्ठंति देहिनः ॥ तावत्स पापकर्त्तापि ब्रह्मलोके महीयते ॥ अथ कालविशेषेण यात्राफलं ॥ तत्र कार्त्ति
कस्य शुक्लाष्टम्यां ॥ स्कांदे मथुराखंडे ॥ संवत्सरं तो जमासे सिताष्टम्यां प्रयत्नतः ॥ यात्रां मधुवनस्यास्य कु
र्वंति हि तपोधनाः ॥ तत्र नवम्यां ॥ आदिवाराहे ॥ कुमुदस्य तु मासस्य मथुरायां वसुंधरे ॥ नवम्यां प्रदक्षिणां कृत्वा
सर्वबंधात्प्रमुच्यते ॥ ब्रह्मघ्नश्च सुरापश्च गोघ्नो भग्नव्रतस्तथा ॥ मथुराप्रदक्षिणां कृत्वा पूतो भवति पातकात्
एवं प्रदक्षिणां कृत्वा नवम्यां शुक्लकौमुदे ॥ सर्वान् कुलान् समादाय विष्णुलोके महीयते ॥ क्रमतः पादवि
न्यासः यावंतः सर्वतो दिशः ॥ तावंतः कुलसंभूताः स्वर्यांति इति शाश्वते ॥ अन्यदेशागतो दूरात्परिक्रामति
यो नरः ॥ तस्य संदर्शनाद्देव पूताः स्युर्जंतकल्मषाः ॥ आनंत्यैस्त विदूरस्थैः कृतं पात्रं नरं न वेः ॥ सर्वपापविनि
र्मुक्तास्तेपि यांति परां गतिं ॥ मथुरायां नरो गत्वा दृष्ट्वा देवं स्वयंभुवं ॥ प्रदक्षिणायां यत्पुण्यं तत्पुण्यं लभते हि

मानवः॥ विश्रांतिस्नानमात्रेण भस्मीभवति तत्क्षणात्॥ सौरपुराणे॥ ततो विश्रांतितीर्थाख्यं तीर्थमंहोविनाशनं
॥ संसारमरुसंचारक्लेशविश्रांतिदं नृणां॥ तत्र तीर्थकृतस्नातो योर्चयेदच्युतं नरः॥ समुक्तो भवसंतापादमृ
तत्वाय कल्पते॥ कूर्मे यमुनामाहात्म्ये॥ कालिंदपर्वतोद्भूते मथुरायां तथा पुरि॥ प्रद्युम्नख्यां च शोकघ्नीं
भागीरथ्याश्च संगमे॥ कलमुत्तरकूले तु कालिंद्यां शताधिकं॥ तदेवकोटिगुणितं विश्रांतौ कथ्यते बुधैः
आदिवाराहे॥ विश्रांतिसंज्ञकं नाम तीर्थं त्रैलोक्यविश्रुतं॥ यस्मिन्स्नातो नरो देवि मम लोके महीयते॥ गं
गापातगुणं प्रोक्तं यत्र केशीनिपातितः॥ केश्याः शतगुणं प्रोक्तं यत्र विश्रामितो हरिः॥ तथा॥ ऊर्ध्वं चंद्राद्विशे
षोस्ति तीर्थे विश्रांतिसंज्ञके॥ वाराहे करणे तत्र गदी सोपि चतुर्भुजः॥ तथा॥ वासुदेवो वसेन्नित्यं तस्मिन्स्था
नेन्नृपोत्तम॥ विश्रांतिं कुरुते येन तेन विश्रांतिसंज्ञकं॥ पुराणांतरेपि॥ कल्पकोटिशतेनापि विश्रांतो रोम
रोमसु॥ क्षौरकर्माणि दाहे च पुनर्जन्म न विद्यते॥ श्रीगतश्रमदेवमाहात्म्ये॥ आदिवाराहे॥ सर्वतीर्थेषु य
त्स्नानं सर्वतीर्थेषु यत्फलं॥ तत्फलं लभते देवि दृष्ट्वा देवं गतश्रमं॥ कालत्रयं तु वसुधे यः प्रपश्यति गतश्र

प्राप्नोतिपरमांगतिं॥ अथश्रीभगवन्मूर्तीनां॥ दीर्घविष्णुंसमालोक्यपद्मनाभंस्वयंभुवं॥ मथुरायांसकृद्देविसर्वाभी
ष्टमवाप्नुयात्॥ तथा॥ विश्रांतिसंज्ञकंदृष्ट्वादीर्घविष्णुंचकेशवं॥ सर्वेषांदर्शनंपुण्यमेभिर्दृष्टैःफलंभवेत्॥ उ
दयेमासमकंतेजःसदाविश्रांतिसंज्ञके॥ मध्याह्नेमासमकंतेजोदीर्घविष्णौव्यवस्थितं॥ केशवेमासमकंतेजोदिन
भागेचतुर्थके॥ अथकृष्णस्यपरिवाराणां॥ एकानंशांततोदेवींयशोदांदेवकींतथा॥ महाविद्येश्वरींदृष्ट्वामुच्यते
ब्रह्महत्यया॥ अथभूतेश्वरस्य॥ मथुरायांचदेवत्वंवरदंपापनाशनं॥ तेनदृष्टेनवसुधेमाथुरंफलमाप्नुया
त्॥ निमीशारखंडे॥ यत्रभूतेश्वरोदेवोमोक्षदःपापिनामपि॥ ममप्रियतमोनित्यंदेवोभूतेश्वरःपरं॥ कथंवामयि
भक्तिंसलभतांपापपूरुषः॥ योमदीयंपरंभक्तंशिवंसंपूजयेन्नहि॥ मन्मायामोहितधियःप्रायस्तेमानवा
धमाः॥ भूतेश्वरंयेस्मरंतिननमंतिस्तुवंतिवा॥ श्रीविश्रांतिमाहात्म्यं॥ स्कंदेमथुराखंडे॥ तत्रतीर्थंमहाराजवि
श्रांतिलोकविश्रुतं॥ भ्रमित्वासर्वतीर्थानिविश्रांतिंयांतिसात्वताः॥ तत्रैवबदरीमहात्म्यं॥ विश्रांतितीर्थेवि
धिवत्स्नात्वाकृत्वातिलोदकं॥ पितृन्नुद्धृत्यनरःकाह्निष्णुलोकंप्रपद्यते॥ यदिकुर्यात्प्रमादेनपातकंतत्र

मथुरा
१२

रविवारे निषेवते ॥ प्राप्नोत्यारोग्यमैश्वर्यमंते च गतिमुत्तमां ॥ आदिवाराहे ॥ यत्र ध्रुवेण संतप्तमिष्टपापरमं तपः ॥ तत्रैवै
स्नानमात्रेण ध्रुवलोके महीयते ॥ ध्रुवतीर्थे तु वसुधे यः श्राद्धं कुरुते नरः ॥ पितॄन् संतारयेत्सर्वान् पितृपक्षे वि
शेषतः ॥ सौरपुराणे ॥ ध्रुवतीर्थमिति ख्यातं तीर्थं मुख्यं ततः परं ॥ यत्र स्नातवतो मोक्षो ध्रुवस्य वनशं समः ॥ स्कांदे म
थुराखंडे ॥ गयायां पिंडदानेन यत्फलं हि नराणां भवेत् ॥ तस्माच्छतगुणं तीर्थे पिंडदानाद्ध्रुवस्य च ॥ ध्रुवतीर्थे
जपो होमस्तपो दानं समर्चनं ॥ सर्वतीर्थाच्छतगुणं नराणां [illegible] तत्र फलं भवेत् ॥ आदिवाराहे ॥ दक्षिणे ध्रु
वतीर्थस्य ऋषितीर्थं प्रकीर्तितं ॥ तत्र स्नातो नरो देवि मम लोके महीयते ॥ स्कांदे मथुराखंडे ॥ तस्मिन्मधुवने पु
रापमृषितीर्थं प्रकीर्तितं ॥ तत्र स्नातो नरो देवि मम लोके महीयते ॥ तस्मिन् मधुवने पुण्यमृषितीर्थं हरेः प्रियं ॥
स्नानमात्रेण भूपाल हरौ भक्तिपरा भवेत् ॥ दक्षिणे ऋषितीर्थस्य मोक्षतीर्थं वसुंधरे ॥ स्नानमात्रेण वसुधे मोक्षं
प्राप्नोति मानवः ॥ आदिवाराहे ॥ तत्रैव कोटितीर्थं तु देवानामपि दुर्लभं ॥ तत्र स्नानेन दानेन मम लोके महीयते
तत्रैव बोधितीर्थं तु पितृणामपि दुर्लभं ॥ पिंडं दत्वा तु वसुधे पितृलोकं स गच्छति ॥ द्वादशैतानि तीर्थानि देवानां दु

द म
१२

मं॥ कृत्वा प्रदक्षिणां भीरु विष्णुलोकं स गच्छति॥ अथ ऊर्द्ध्वं च स्थितानि मुख्यप मुनातीर्थानि॥ चतुर्विंशतिः॥ अ
मं॥ कृत्वाप्रदक्षिणां भीरु विष्णुलोकं स गच्छति ॥ अविमुक्ते नरः स्नातो मुक्तिं प्राप्नोत्य संशयं॥ तत्राथ मुच्यते प्राणान् अमलो कंस गच्छति॥ विश्रान्ति सं
दिवारोहे॥ अविमुक्ते नरः स्नातो मुक्तिं प्राप्नोत्यसंशयं॥ तत्र यो मुच्यते प्राणान् अमलोकं स गच्छति॥ विश्रान्तिसं
जकं नाम तीर्थं त्रैलोक्य विश्रुतं॥ यस्मिन् स्नातो नरो देवि ममलोके महीयते॥ अस्ति चान्यतरं गुह्यं सर्वसंसारमो
क्षणं॥ तस्मिन् स्नातो नरो देवि ममलोके महीयते॥ प्रयागं नाम तीर्थं तु देवानामपि दुर्लभं॥ तस्मिन् स्नातो नरो
देवि अग्निष्टोमफलं लभेत॥ सौरपुराणे॥ ततस्तीर्थं प्रयागाख्यं पवित्रं पापनाशनं॥ पितृभ्यस्तत्र यद्दत्तं तदक्षय
तरं भवेत्॥ तत्तीर्थं सेवमानस्य कृत्स्नं च जगतां गुरो॥ निःसंशयं मनुष्यस्य न पुनर्जन्मसंभवः॥ आदि वाराहे॥ त
थाकनखलं तीर्थं गुह्यं तीर्थं परं मम॥ स्नानमात्रेण तत्रापि न कष्टे स मोदते॥ अस्ति क्षेत्रं परं गुह्यं तिंदुकं नाम
नामतः॥ तस्मिन् स्नातो नरो देवि ममलोके महीयते॥ ततः परं सूर्यतीर्थं सर्वपापप्रमोचनं॥ वैरोचनेन वलिना
सूर्यस्त्वाराधितः पुरा॥ आदित्ये हनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः॥ तस्मिन् स्नातो नरो देवि राजसूयफलं लभेत॥
सौरपुराणे॥ ततः वटस्वामितीर्थाख्यं तीर्थमुत्तमं॥ वटस्वामीति विख्यातो यत्र देवो दिवाकरः॥ तत्तीर्थं चैव यो भक्त्या

वित्रं परमं शुभं॥ तत्रैव स्नानमात्रेण गवां कोटि फलं लभेत्॥ मथुरा खंडम तं तु विश्रांतिं विना चतुर्विंशतिर्लां॥ त
पाहि॥ चतुर्विंशतितीर्थानि तत्तीर्थाद् दक्षिणोत्तरे॥ दशाश्वमेध पर्यंतं मोक्षांतं च युधिष्ठिर॥ अथात्र त्यापरं प्रसि
द्ध तीर्थनां माहात्म्यं॥ तत्र गोकर्णस्य सौरपुराणे॥ ततो गोकर्ण तीर्थाख्यं तीर्थं त्रिभुवन विश्रुतं॥ विद्यते विश्वनाथ
स्य विश्णोरत्यंत वल्लभं॥ कृष्णगंगायाः॥ आदिवाराहे॥ पंचतीर्थाभिषेकाच्च यत्फलं लभते नरः॥ कृष्णगंगा दशगु
णं तद्दिने दिने॥ वैकुंठस्य॥ वैकुंठ तीर्थे यः स्नाति मुच्यते सर्व पातकैः॥ सर्व ताप विनिर्मुक्तो ब्रह्मलोकं स गच्छ
ति॥ असिकुंडस्य॥ एका वराह संज्ञा च तथा नारायणी परा॥ वामना च तृतीया वै चतुर्थी लांगली शुभा॥ एतास्व त
स्त्रो पः पश्ये त्स्ना त्वा कुंडे सि संज्ञके॥ चतुः सागर पर्यंतां क्रांता तेन धरा ध्रुवं॥ तीर्थानां माथुराणां च सर्वेषां फलम
श्नुते॥ चतुःसामुद्रिक कूपस्य॥ चतुःसामुद्रिकं नाम कूपं लोकेषु विश्रुतं॥ तत्र स्नातो नरो भद्रे देवैस्तु सह मोदते॥
अथ श्री कालिंदी माहात्म्यं॥ आदिवाराहे॥ गंगा शतगुणा प्रोक्ता माथुरे मम मंडले॥ यमुना विश्रुता देवि नात्र का
र्य विचारणा॥ तत्र तीर्थानि गुह्यानि भविष्यंति ममानघे॥ येषु स्नातो नरो देवि मम लोके महीयते॥ यमुना सलिले

र्लभानि च ॥ तेषां स्मरणमात्रेण सर्वपापैः प्रमुच्यते ॥७ तरत्नसिकुंडाख्यतीर्थं तु नवसंज्ञकं ॥ नवतीर्थात्परं तीर्थं नभ
तेन भविष्यति ॥ ततः संयमनं नाम तीर्थं त्रैलोक्यविश्रुतं ॥ तत्र स्नातो नरो देवि यमलोकं स गच्छति ॥ धारापतनके
स्नात्वा नाकपृष्ठे समोदते ॥ अथात्र मुंचते प्राणान् सोमलोकं स गच्छति ॥ १५ ॥ अतः परं नागतीर्थं तीर्थानामुत्तमो
त्तमं ॥ यत्र स्नाता दिवं यांति ये मृतास्ते पुनर्भवाः ॥ ब्रह्मभरणाकं तीर्थं सर्वपापप्रमोचनं ॥ यस्मिन् स्नातो नरो देवि
सूर्यलोके महीयते ॥ तीर्थानामुत्तमं तीर्थं ब्रह्मलोके ॥ ति विश्रुतं ॥ तत्र स्नात्वा च पीत्वा च नियतो नियताशनः ॥
ब्रह्मणा समनुज्ञातो विष्णुलोकं स गच्छति ॥ सोमतीर्थं तु वसुधे पवित्रे यमुनांभसि ॥ तत्राभिषेकं कुर्वीत तस्य स्वक
र्म्यप्रतिष्ठितः ॥ मोदते सोमलोके तु एवमेव न संशयः ॥ सरस्वत्याश्रयतनं सर्वपापहरं शुभं ॥ तत्र स्नात्वा नरो देवि
अवर्णीयतिर्भवेत् ॥ चक्रतीर्थं च विख्यातं माथुरे मम मंडले ॥ यस्तत्र कुरुते स्नानं त्रिरात्रोपोषितो नरः ॥ स्नान
मात्रेण मनुजो मुच्यते ब्रह्महत्यया ॥ दशाश्वमेधं ऋषिभिः पूजितं सर्वदा पुरा ॥ तत्र ये स्नाति नियतास्तेषां स्वर्गो न
दुर्लभः ॥ तीर्थं तु विघ्नराजस्य पुण्यं पापहरं शुभं ॥ तत्र स्नातं तु मनुजं विघ्नराजो न पीडयेत् ॥ ततः परं कोटितीर्थं प

उतेदेवकीसुतः॥तत्रस्नात्वामहादेवि सर्वतीर्थफलंभवेत्॥अहोऽभाग्यंलोकस्यनपीतंयमुनाजलं॥गोविंद
गोपिकासंगेयत्रक्रीडतिकंसहा॥तत्रैवनिर्वाणाख्यंवै॥चिदानंदमयीसाक्षात्यमुनायमभीतिनुत॥कालविशे
षतत्रस्नानादिफलं॥आदिवाराहेवसुधांप्रति॥ज्येष्ठस्यशुक्लद्वादश्यांसमभ्यर्च्यजनार्दनं॥धन्योसौपिंडनिर्वा
पंयमुनायांप्रदास्यति॥विष्णुपुराणे॥यमुनासलिलेस्नातःपुरुषोमुनिसत्तमः॥ज्येष्ठामूलामलेपक्षेद्वादश्यामु
पवासकृत॥समभ्यर्च्याच्युतंसम्यङ्मथुरायांसमाहितः॥अश्वमेधस्ययज्ञस्यप्राप्नोत्यधिकंफलं॥तत्रैवपितृ
वाक्यं॥कश्चिदस्मत्कुलेजातःकालिंदीसलिलाप्लुतः॥अर्चयिष्यतिगोविंदंमथुरायामुपोषितः॥ज्येष्ठामू
लामलेपक्षेयेनैववयमच्युत॥परामृद्धिमवाप्स्यामस्तारिताःस्वकुलोद्भवैः॥ज्येष्ठस्यशुक्लद्वादश्यांसमभ्यर्च्य
जनार्दनं॥धन्योसौपिंडनिर्वापंयमुनायांप्रदास्यति॥बृहन्नारदीये॥ज्येष्ठमासेपूर्णमास्यांमूलेर्दैप्रयतो
नरः॥स्नात्वाचयमुनायांवैमथुरायामुपोषितः॥अभ्यर्च्यविधिनाविष्णुंयत्फलंलभतेद्विजाः॥तत्सर्वंप्राप्नुवः
सम्यक्कृष्णस्यध्वंगदतोमम॥जन्मायुतार्जितैःपापैःमुक्तःकोटिकुलान्वितः॥वृद्धस्नाताःपद्मासाद्यतत्रैवपरि

स्नातःशुचिर्भूत्वाजितेंद्रियः॥समभ्यर्च्याच्युतंसम्यक्प्राप्नोतिपरमांगतिं॥वाराहे॥नदीतत्रवरारोहेशुभापुण्योज्ज्व
लोदका॥विवस्वतःसुतारम्यायमुनावैभविष्यति॥साप्रयागेनुसुश्रोणिब्रह्मदत्तेसहायया॥संमेष्यतिनसंदेहे
गंगयातदनंतरं॥मात्स्ये॥युधिष्ठिरमार्कंडेयसंवादे॥तत्रस्नात्वाचपीत्वाचयमुनायांयुधिष्ठिर॥कीर्तनाल्लभतेपु
ण्यंदृष्ट्वाभद्राणिपश्यति॥अवगाह्यचपीत्वाचपुनात्यासप्तमंकुलं॥प्राणांस्त्यजतियस्तत्रसयातिपरमांगतिं॥वि
ष्णुधर्मोत्तरे॥यत्रक्वचनकालिंद्यांकृत्वाश्राद्धंनराधिप॥अक्षय्यंफलमाप्नोतिनाकपृष्ठेसमोदते॥पद्मपुराणे॥
पातालखंडे॥मारीचिसर्गे॥रसोयःपरमाधारःसच्चिदानंदलक्षणः॥[illegible]ब्रह्मेत्युपनिषद्गीतःसएवयमुनास्व
यं॥पावनायास्यजगतःसरिद्भूतासमारहे॥तथा॥पातकीपातकान्मुक्तःपुण्याढ्यःस्यादपातकी॥फलाभिसंधिर
हितःकालिंद्यामेवमुच्यते॥स्नानादिकर्मकालिंद्यांयेनकेनापियत्कृतं॥यथावद्यथावद्वातत्साधुफलवद्भवे
त्॥विशेषतश्चकालिंद्यांमृतोयातिहरेःपदं॥मधुरासंगतायांतुहरिरेवभवेन्नरः॥तत्रैवहरगौरीसंवादे॥ब्रह्म
ज्ञानेनमुच्यंतेकाश्यांचमरणेनवा॥अथवास्नानमात्रेणकृष्णायांकृष्णसंनिधौ॥यमुनाजलकल्लोलेक्री

वातिर्यग्योनिगतोपि वा ॥ तिष्ठेद्युगसहस्रं तु पादैकेन यः पुमान् ॥ तस्माधिकं भवेत्पुण्यं मथुरायां निवासिनः
परदाररता ये च ये नराश्चाजितेंद्रियाः ॥ मथुरावासिनः सर्वे ते देवा नरविग्रहाः ॥ सिद्धभूतगणाः सर्वे ये देवगणा भुवि
मथुरावासिनो लोकांस्ते पश्यंति चतुर्भुजान् ॥ मथुरायां ये वसंति विष्णुरूपा हि ते खलु ॥ अज्ञानास्तान्न पश्यंति पश्यं
ति ज्ञानचक्षुषः ॥ मथुरायां पुरे यस्तु प्रासादं पुरवासिनां ॥ कारयित्वा तु मनुजो जायते स चतुर्भुजः ॥ स्कांदे ॥ मथु
रावासिनो लोकान्मनसापि द्विषंति ये ॥ न जातु भविता तेषां विरहो निरयैः सह ॥ मथुरावासिनां कुर्वन्नुपकारान्म
नागपि ॥ ये लोका नास्ति तेषां हि पुरापस्यांतः कथंचन ॥ पाद्मे पातालखंडे ॥ धन्या माथुरवासास्ते वसंति हरिसन्निधौ
चतुर्वर्णधरः सोयं पिबते यमुनाजलं ॥ एवं पचाः पावनास्ते तत्र वसंति मथुरापुरे ॥ अन्यग्रामस्य विप्राणां मथुरावा
सतोधिकाः ॥ तत्रैव निर्माणखंडे ॥ मथुरावासिनो धन्या मान्या अपि दिवौकसां ॥ अगण्यमहिमानस्ते सर्व एव
चतुर्भुजाः ॥ मथुरावासिनां ये तु दोषं न पश्यंति मानवाः ॥ ते स्वदोषं न पश्यंति जन्मजन्मसहस्रकं ॥ अथ द्वादशवनानां
माहात्म्यं ॥ तत्रादिवाराहमतं ॥ मधुवनं पुरा स्मिन्नमपि अस्ति ॥ तथाहि ॥ तेन दृष्टा च सा रम्या वासवस्य पुरी यथा ॥

मुच्यते ॥ पद्मपुराणे ॥ संक्रांतौ रविवारे सप्तम्यां वैधृतौ तथा ॥ व्यतीपाते चहस्तर्क्षे त्वाष्ट्रे पौष्णे पुनर्वसौ ॥ एकादश्यां
चतुर्दश्यामष्टम्यां च विधुक्षये ॥ पौर्णमास्यां च पक्षे वीक्षं फलं शतगुणं भवेत् ॥ तदेव स्यात्कोटिगुणं ग्रहणे चंद्रसू
र्ययोः ॥ द्वादश्यामर्चयेद्विष्णुमेकादश्यामुपोष्य यः ॥ कालिंद्यां तस्य सुलभं तद्विष्णोः परमं पदं ॥ अथ माथुरब्राह्म
णमाहात्म्यं ॥ आदिवाराहे ॥ अनृचो माथुरो यत्र चतुर्वेदस्तथापरः ॥ चतुर्वेदं परित्यज्य माथुरं भोजयेद्बुधः ॥ कृषीवले
दुराचारे धर्ममार्गपराङ्मुखः ॥ ईदृशोपि द्विजनीयो माथुरो मम रूपधृक् ॥ माथुराणां च यद्दूतं मे रूपं वसुंधरे ॥ ए
कस्मिन् भोजिते विप्रे कोटिर्भवति भोजिता ॥ माथुरा मम पूज्या हि माथुरा मम वल्लभाः ॥ माथुरे परितुष्टे वै तुष्टोहं ना
त्र संशयः ॥ भवंति सर्वतीर्थानि पुराणान्यायतनानि च ॥ मंगलानि च सर्वाणि यत्र तिष्ठंति माथुराः ॥ अथ मथुराबा
सिमाहात्म्यं ॥ आदिवाराहे ॥ ये वसंति महाभागे मथुरामितरे जनाः ॥ तेपि यांति परां सिद्धिं मत्प्रसादान्न संशयः ॥ यस्त
त्र निवसेद्देवि संयतात्मा जितेंद्रियः ॥ त्रिकालमपि भुंजानो वायुभक्षसमो हि सः ॥ मथुरायां महादेव्यां ये वसंति शुचि
व्रताः ॥ बलिभिक्षाप्रदातारो देवास्ते नरविग्रहाः ॥ मथुरावासिनो लोकाः सर्वे ते मुक्तिभाजनाः ॥ अपि कीटपतंगो

स्कंदे मथुराखंडे ॥ बहुलाश्री हरेः पत्नी तत्र तिष्टति सर्वदा ॥ तस्मिन्नृप ध्यावने राजन् बहुपुत्तपफलानि च ॥ तत्रैव
रमते विष्णुर्लक्ष्म्या सार्द्धं स देवहि ॥ तत्र संकर्षणं कुंडं तत्र मानससरोन्नृप ॥ यस्तत्र कुरुते स्नानं मधुमासेन्नपोत्तम ॥ स
पश्यति हरिं तत्र लक्ष्म्या सह विशांपते ॥ षष्टमद्रवनस्य ॥ आदिवाराहे ॥ तस्मिन् भद्रवनं नाम षष्टं वनमनुत्तमं ॥ तत्र
गत्वा तु वसुधे भद्र क्षोमत्यरायशाः ॥ तस्य वनप्रभावेन नागलोकं स गच्छति ॥ खादिनवनस्य सप्तमस्य ॥ आदिवारा
हे ॥ सप्तमं तु वनं भूमे खादिरं लोकविश्रुतं ॥ तत्र गत्वा नरो भद्रे मम लोकं स गच्छति ॥ महावनस्याष्टमस्य ॥ आदिवारा
हे ॥ महावनं चाष्टमं तु सदैव तु मम प्रियं ॥ तस्मिन्न् गत्वा तु मनुजो इंद्रलोके महीयते ॥ यमलार्जुन तीर्थं च कुंडं त
त्र च वर्त्तते ॥ पर्यस्तं यत्र शकटं भिन्नभांडकुटीघटं ॥ तत्र स्नानोपवासेन अनंतं फलमाप्नुयात ॥ तत्र जोपीश्वरो ना
म महापातकनाशनः ॥ सप्तसामुद्रिकं नाम कूपं तु विमलोदकं ॥ देवस्याग्रे तु वसुधे जोपीशस्य महात्मनः ॥ पितरस्
त्वाभिनंदंति पानीयं पीडुमेव च ॥ सोमवारे त्वमावास्यां पिंडदानं करोति यः ॥ गयापिंडप्रदानं च कृतं नास्त्यत्र संशयं
लोहजंघवनस्य नवमस्य ॥ आदिवाराहे ॥ लोहजंघवनं नाम लोहजंघेन रक्षितं ॥ नवमं तु वनं देवि सर्वपातकन

वने द्वादशमि पुण्या पुरा पापापहरा शुभा ॥ अस्य माहात्म्यं ॥ रम्यं मधुवनं नाम विष्णुस्थानमनुत्तमं ॥ यद् दृष्ट्वा मनुजो
देवि सर्वान्कामानवाप्नुयात् ॥ तालवनस्य ॥ आदिवाराहे ॥ वनं तालवनं चैव द्वितीयं वनमुत्तमं ॥ यत्र स्नात्वा नरो देवि
कृतकृत्यो भिजायते ॥ तत्र कुंडं स्वच्छजलं नीलोत्पलविभूषितं ॥ तत्र स्नानेन दानेन वांछितं फलमाप्नुयात् ॥ स्कांदे
मथुराखंडे ॥ अहो तालवनं पुण्यं यत्र तालैर्हतो सुरः ॥ हिताय यादवानां च आत्मक्रीडनकाय च ॥ यस्तत्र कुरुते स्
स्नानं यत्र कुत्र स्थिते जले ॥ स देवत्वमवाप्नोति देहांते देवदर्शनः ॥ कुमुदवनस्य ॥ आदिवाराहे ॥ वनं कुमुदवनं चै
व तृतीयं वनमुत्तमं ॥ तत्र गत्वा नरो देवि कृतकृत्यो हि जायते ॥ काम्यवनस्य ॥ आदिवाराहे ॥ चतुर्थं काम्यकं वनं व
नानां वनमुत्तमं ॥ तत्र गत्वा नरो देवि मम लोके महीयते ॥ विमलस्य च कुंडे तु सर्वपापं विमोक्षते ॥ यस्तत्र मुंचति प्रा
णान्मम लोके स गच्छति ॥ स्कांदे मथुराखंडे ॥ ततः काम्यवनं राजन् यत्र वाल्ये स्थितो भवान् ॥ स्नानमात्रेण सर्वे
षां सर्वकामफलप्रदं ॥ तत्र कामसरो राजन् गोपिकारमणं सरः ॥ तत्र तीर्थसहस्राणि सरांसि च पृथक् पृथक् ॥
बहुलावनस्य पंचमस्य ॥ पंचमं बाहुलावनं वनानां वनमुत्तमं ॥ तत्र गत्वा नरो देवि अग्निस्थानं स गच्छति ॥

खसंहंतजीवमातविमुक्तिदं ॥ श्रीदशमे ॥ वनं वृंदावनं नाम पशव्यं नवकाननं ॥ गोपगोपीगवां सेव्यं पुण्याद्रि
तृणवीरुधं ॥ वृन्दावनं सखि भुवो वितनोति कीर्त्तिं यद्देवकीसुतपदांबुजलब्धलक्ष्मि ॥ गोविंदवेणुमनुमत्तमयू
रनृत्यं प्रेक्ष्याद्रिसान्वपरतान्यसमस्तसत्वं ॥ एतेन श्रीवृन्दावनस्य लोकप्रसिध्याषोडशक्रोशीविस्तारत्वं युक्तमेव
श्रीगोविंदवृंदावनाख्यबृहद्ग्रंथेऽपीत्थिदं दृश्यते ॥ तत्र श्रीनारदप्रश्नो यथा ॥ किमिदं द्वादशाभिरख्यं वृन्दारण्यं वि
शांपते ॥ श्रोतुमिच्छामि भगवन्यदि योग्योऽस्मि मे रति ॥ तत्र श्रीकृष्णस्योत्तरं ॥ इदं वृन्दावनं रम्यं मम धामैव केवलं
अत्र मे पशवः पक्षिवृक्षाः कीटा नरामराः ॥ ये वसंति ममाधिष्ठे मृता यांति ममालयं ॥ अत्र या गोपपत्न्यश्च निवसंति
ममालये ॥ योगिन्यस्ता मया नित्यं मम सेवापरायणाः ॥ पंचयोजनमेवास्ति वनं मे देहरूपकं ॥ कालिंदीयं सुषु
म्नाख्या परमामृतवाहिनी ॥ अत्र देवाश्च भूतानि वर्त्तंते सूक्ष्मरूपतः ॥ सर्वदेवमयश्चाहं न त्यजामि वनं क्वचित्
आविर्भावस्तिरोभावो भवेदत्र युगे युगे ॥ तेजोमयमिदं रम्यमदृश्यं चर्मचक्षुषेति ॥ तत्र स्थस्य श्रीगोविंदस्य ॥ आ
दिवाराहे ॥ वृन्दावने च गोविंदं ये पश्यंति वसुंधरे ॥ न ते यमपुरं यांति यांति पुण्यकृतां गतिं ॥ स्कांदे मथुराखंडे ॥ नार

शनं॥ विल्ववनस्य दशमः॥ आदिवाराहे॥ वनं विल्ववनं नाम दशमं देवपूजितं॥ तत्र गत्वा तु मनुजो ब्रह्मलोके महीयते॥ भांडीरवनस्यैकादशः॥ आदिवाराहे॥ एकादशं तु भांडीरं योगिनां प्रियमुत्तमं॥ तस्य दर्शनमात्रेण नरो गर्भं न गच्छति॥ भांडीरं समनुप्राप्य वनानां वनमुत्तमं॥ वासुदेवं ततो दृष्ट्वा पुनर्जन्म न विद्यते॥ तस्मिन् भांडीरके स्नातो नियतो नियताशनः॥ सर्वपापविनिर्मुक्तः इंद्रलोकं स गच्छति॥ श्रीवृन्दावनस्य॥ आदिवाराहे॥ वृन्दावनं द्वादशमं वृन्दया परिरक्षितं॥ मम चैव प्रियं भूमे सर्वपातकनाशनं॥ तथाहं क्रीडयिष्यामि गोपीगोपालकैः सह॥ सुरम्यं सुप्रतीतं च देवदानवदुर्लभं॥ स्कांदे मथुराखंडे॥ ततो वृन्दावनं पुण्यं वृन्दादेवीसमाश्रितं॥ हरिणाधिष्ठितं तच्च ब्रह्मरुद्रादिसेवितं॥ वृंदावनं सुगहनं विशालं विस्तृतं बहु॥ मुनीनामाश्रमैः पूर्णं वन्यवृंदसमन्वितं॥ यथा लक्ष्मीः प्रियतमा यथा भक्तिपरा नराः॥ गोविंदस्य प्रियतमं तथा वृन्दावनं भुवि॥ वत्सैर्वत्सतरीभिश्च साकं क्रीडति माधवः॥ वृन्दावनांतरगतः सरामो बालकैर्वृतः॥ अहो वृन्दावनं रम्यं यत्र गोवर्द्धनो गिरिः॥ यत्र तीर्थान्यनेकानि विष्णुदेवकृतानि च॥ पाद्मे निर्माणखंडे॥ वनमानंदकं दाख्यं महापातकनाशनं॥ समस्तदुः

वमथुरा
मथुरा
१८

तिच मध्याह्ने मम भक्तसुखावहः ॥ न कश्चिदपि जानाति विना भागवतं शुचिं ॥ अथ केशीतीर्थस्य ॥ आदिवाराहे ॥
ऽंगाशतगुणं पुण्यं यत्र केशी निपातितः ॥ तत्रापि च विशेषोस्ति केशितीर्थे वसुंधरे ॥ तस्मिन्पिंडप्रदानेन ग
यापिंडफलं लभेत ॥ अथ कालियहृदस्य ॥ कालियस्य हृदं गत्वा क्रीडां कृत्वा वसुंधरे ॥ स्नानमात्रेण तत्रैव
सर्वपापैः प्रमुच्यते ॥ अथात्र मुंचते प्राणान्मम लोकं स गच्छति ॥ श्री दशमे ॥ कृष्णवाक्यं सर्प्पं प्रति ॥ यो
स्मिन्स्नात्वा मदाक्रीडे देवादींस्तर्पयेज्जलैः ॥ उपोष्य मां स्मरन्नर्चेत्सर्वपापैः प्रमुच्यते ॥ वाराहे ॥ कालि
यस्य हृदं पुण्यं मम स्मिन्गुह्यं परं मम ॥ यत्राहं क्रीडये नित्यं विमले यमुनांभसि ॥ तत्राभिषेकं कुर्वीत अहोरात्रो
षितो नरः ॥ स तक्षकगृहं गत्वा नागकन्याभिमोदिते ॥ अथात्र मुंचते प्राणान्विमले यमुनांभसि ॥ तक्षकस्य
गृहं हित्वा मम लोके महीपते ॥ तत्रापि महदाश्चर्यं पश्यंति पंडिता नराः ॥ कालियहृदपूर्णीकदंबो महितो द्रुमः
शतशाखं विशालाक्षि पुण्यं सुरभिगंधि च ॥ स च द्वादशमासानि मनोज्ञः शुभशीतलः ॥ पुष्पयति विशाला
क्षि प्रभासंतो दिशो दश ॥ सौरपुराणे ॥ ततः कालियतीर्थमाख्यं तीर्थमंहोविनाशनं ॥ अनंतस्यात्र भग

राम
१८

दो क्तो ॥ तस्मिन्वृंदावने पुरायं गोविंदस्य निकेतनं ॥ तत्सेवक समाकीर्णं तत्रैव स्थीयते मया ॥ भुवि गोविंदवैकुंठं
तस्मिन्वृंदावने नृप ॥ यत्र वृंदादयो भृत्याः संति गोविंदलालसाः ॥ वृंदावने महासक्तायैः दृष्टं पुरुषोत्तमैः ॥ गोविं
दस्य महीपाल ते कृतार्थी महीतले ॥ अथ गोविंदतीर्थस्य ॥ सौर पुराणे ॥ गोविंदस्वामितीर्थाख्यमस्ति तीर्थं महोत्त
मं ॥ वसुदेवतनूजस्य विहारस्थं तव ल्लभं ॥ गोविंदस्वामिना मात्र वसत्यचीत्मको च्युतः ॥ तत्र स्नात्वा तमभ्यर्च्य
मुक्तिमिच्छंति साधवः ॥ अथ पद्मस्नाकुंडस्य ॥ आदिवाराहे ॥ तत्र कुंडे महाभागे वकुज्ज्वलमलताव्रते ॥ अत्र स्ना
न प्रकुर्वीत एकरात्रोषितो नरः ॥ गंधर्वैरप्सरोभिश्च क्रीडमानः समोदते ॥ तत्रापि मुंचते प्राणान्मम लोकं स गच्छति
वाराहे ॥ तत्र कुंडं महाभागे वकुज्ज्वलमलतावृते ॥ पूर्णामेव तथा तीर्थस्य रम्यं च शिलाचितं ॥ तत्र स्नानं प्रकुर्वीत
चतुःकामोषितो नरः ॥ मोदते विमले दिव्ये गंधर्वाणां कुले स्वयं ॥ तत्रापि मुंचति प्राणान्स मतं कृत निश्चयः ॥ गंध
र्वपुरमुत्सृज्य मम लोकं स गच्छति ॥ तत्राश्चर्यं प्रवक्ष्यामि तच्छृणुष्व वसुंधरे ॥ लभंते मनुजाः सिद्धिं मम का
र्यपरायणाः ॥ तस्य तत्रोत्तरे पार्श्वे श्लोक वृक्षः सितः प्रभः ॥ वैशाखस्य तु मासस्य शुक्लपक्षस्य द्वादशी ॥ सपुष्प

उपितम्पश्वराजसूयफलंलभेत॥स्कंदेमथुराखंडे॥गोवर्द्धनश्चभगवान्यत्रगोवर्द्धनो[struck]ध्वतः॥रक्षिताया
वाःसर्वेइंद्रवृष्टिनिवारणात॥अहोगोवर्द्धनोविष्णुर्यत्रतिष्ठतिसर्वदा॥तत्रविष्णोःशिवोलक्ष्मीर्वसत्येवनसंशयः
॥वाराहे॥अस्तिगोवर्द्धनंनामगुह्यंक्षेत्रंपरंमम॥अदूरादष्टकोशात्तुमथुरायाश्चपश्चिमे॥तत्रापिमहदाश्चर्य्यंयत्प
श्यतिसचेतसः॥तस्मिन्संवर्त्ततेभूमिसर्वभागवतप्रियं॥चतुर्विंशतिद्वादशांतस्मिन्शिखरपर्वते॥स्थूलान्पश्यं
तिदीपान्वैद्योतयंतोदिशोदिश॥पश्यंतेपश्यतेदीपान्धर्मकर्मपरायणाः॥लभतेपरमांसिद्धिमेवमेतन्नसंशयं॥
भाद्रकृष्णपरिवर्त्तन्यांगोवर्द्धनयात्राआदिवाराहे॥मासिभाद्रपदेयातुशुक्लाचैकादशीशुभा॥गोवर्द्धनेसोपवा
सःकुर्यात्तस्यप्रदक्षिणां॥गोवर्द्धनंपरिक्रम्यदृष्ट्वादेवंहरिंप्रभुं॥राजसूयाश्वमेधाभ्यां फलंप्राप्नोत्यसंश
यं॥श्रीदशमे॥हंतायमद्रिरबलाहरिदासवर्यो यद्रामकृष्णचरणस्पर्शप्रमोदः॥मानंतनोतिसहगोग
णायोस्तयोर्यत्पानीयसूयवसकंदरकंदमूलैः॥तत्रस्थब्रह्मकुंडस्य॥मथुराखंडे॥तत्रस्थब्रह्मकुंडंब्र
ह्मणातोषितोहरिः॥इंद्रादिलोकपालानांजातानिचसरांसिहि॥आदिवाराहे॥इंद्रंतत्रमहाभागेद्रुमगु

वान्बालः कालियमस्तके ॥ तत्र यस्तु कृतस्नानो वासुदेवं समर्चयेत् ॥ अघन्यजनदुष्प्रापं कृष्णसायुज्यमश्नुते ॥
द्वादशादित्यसंज्ञस्य ॥ आदिवाराहे ॥ सूर्यतीर्थे नरः स्नातो दृष्ट्वादित्यान्वसुंधरे ॥ आदित्यभवनं प्राप्य कृतकृत्यः
समोदते ॥ आदित्येऽहनि संक्रान्तावस्मिंस्तीर्थे वसुंधरे ॥ मनसाभीप्सितं कामं संप्राप्नोति न संशयः ॥ सोऽरपुरतो
द्वादशादित्यतीर्थाख्यं तीर्थं तदनु पावनं ॥ तस्य दर्शनमात्रेणान्तरात्मं हो विनश्यति ॥ यथोक्तप्रथमादिवनानां
यात्रायाः कर्तव्यत्वोपदेशः ॥ आदिवाराहे ॥ प्रथमं मधुवनं प्रोक्तं द्वादशं वृंदकाननं ॥ एतानि ये प्रपश्यंति न ते न
रकभोजिनः ॥ यथाक्रमेणायेयात्रां वनानां द्वादशस्य तु ॥ करिष्यंति वरारोहे यांति ते ब्रह्ममालयं ॥ तत्राद्यगोवर्
द्धनस्य ॥ तत्रैव अस्ति गोवर्द्धनं नाम क्षेत्रं परमदुर्ल्लभं ॥ मथुराया पश्चिमे भागे दूराद्योजनद्वयं ॥ अत्र कूटं ततः प्रा
प्य तस्य कुर्यात्प्रदक्षिणां ॥ न तस्य पुनरावृत्तिर्देवि सत्यं ब्रवीमि ते ॥ स्नात्वा मानसगंगायां दृष्ट्वा गोवर्द्धने हरिं ॥ अ
न्नकूटं परिक्रम्य किं मनः परितप्यते ॥ इंद्रस्य वर्षतो त्यर्थं गवां पीडाकरं जलं ॥ तासां संरक्षणार्थाय धृतो गिरिवरो म
या ॥ सोऽन्नकूट इति ख्यातः सर्वतः शक्रपूजितः ॥ सोमवारे सोमवारे त्वमावस्यां प्राप्य गोवर्द्धनो नरः ॥ दत्वापिं

मथुरा
२०

डपितं भ्यश्च राजसूयफलं लभेत ॥ स्कंदे मथुराखंडे ॥ गोवर्द्धनश्च भगवान् यत्र गोवर्द्धनो ऽच्युतः ॥ रक्षितायाद
वाः सर्वेंद्र वृष्टिनिवारणात ॥ अहो गोवर्द्धनो विष्णुर्यत्र तिष्ठति सर्वदा ॥ तत्र विष्णोः शिवो लक्ष्मीर्वसत्येव न संशयः
॥ वाराहे ॥ अस्ति गोवर्द्धनं नाम गुह्यं क्षेत्रं परं मम ॥ अदूराद् दशक्रोशात्तु मथुरायाश्च पश्चिमे ॥ तत्रापि महदाश्चर्यं यत्प
श्यंति सचेतसः ॥ तस्मिन् संवर्त्तते भूमि सर्वभागवतप्रियं ॥ चतुर्विंशति द्वादश्यां तस्मिन् शिखरपर्वते ॥ स्थूलान्पश्यं
ति दीपान्वै द्योतयंतो दिशो दिशः ॥ पश्यंते पश्यते दीपान् भ्रमकर्मपरायणाः ॥ लभते परमां सिद्धिमेवमेतन्न संशयं ॥
भद्रकटिपरिवर्त्तन्यां गोवर्द्धनयात्रा ॥ आदिवाराहे ॥ मासि भाद्रपदे या तु शुक्ला चैकादशी शुभा ॥ गोवर्द्धने सोपवा
सः कुर्यात्तस्य प्रदक्षिणां ॥ गोवर्द्धनं परिक्रम्य दृष्ट्वा देवं हरिं प्रभुं ॥ राजसूयाश्वमेधाभ्यां फलं प्राप्नोत्यसंश
यं ॥ श्रीदशमे ॥ हंतायमद्रिरबला हरिदासवर्यो यद्रामकृष्णचरणस्पर्शप्रमोदः ॥ मानं तनोति सहगोग
णयोस्तयोर्यत्पानीयसूयवशकंदरकंदमूलैः ॥ तत्रस्थब्रह्मकुंडस्य ॥ मथुराखंडे ॥ तत्रस्थब्रह्मकुंडे
स्नानात्तोषितो हरिः ॥ इंद्रादिलोकपालानां जातानि च सरांसि हि ॥ आदिवाराहे ॥ हृदं तत्र महाभागे कुमुगु

राम
२०

स्मलतायुतं॥ चत्वारि तत्र तीर्थानि पुराणानि च कृभानि च॥ ऐंद्रं पूर्वेशापार्श्वे न यम तीर्थं तु दक्षिणे॥ वारुणं
पश्चिमे तीर्थं कौवेरं चोत्तरे शनु॥ तत्र मध्ये स्थितं ध्याहं क्रीडयिष्ये मदृच्छया॥ गोविंदकुंडस्य॥ मथुराखंडे॥
यत्राभिषिक्तो भगवान् मघोनायदुवैरिणा॥ गोविंदकुंडतज्जाते स्नानमात्रेण मोक्षदं॥ आदिवाराहे॥
अन्नकूटस्य सांनिध्ये तीर्थं शक्र विनिर्मितं॥ अस्मिन्स्नानं तर्पणं च शतक्रतुफलं लभेत॥ श्रीराधाकुंडा
दिकस्य आदिवाराहे॥ अरिष्टराधाकुंडाभ्यां स्नानात्फलमवाप्यते॥ राजसूयाश्वमेधाभ्यां नात्र कार्यविचा
रणा॥ मथुराखंडे॥ दीपोत्सवे कार्तिके च राधाकुंडे युधिष्ठिर॥ दृश्यते सकलं विश्वं भक्तैर्विष्णुपरायणैः॥ पा
पाद्मे कार्तिकमाहात्म्ये॥ गोवर्द्धनगिरौ रम्ये राधाकुंडं प्रियं हरेः॥ कार्तिके बहुलाष्टम्यां तत्र स्नात्वा हरेः प्रियः
नरो भक्तो भवेद्विप्रास्तद्धितस्य प्रतोषणं॥ यथा राधा प्रिया विष्णोस्तस्याः कुंडं प्रियं तथा॥ सर्वगोपीषु सैवै
का विष्णोरत्यंतवल्लभा॥ तत्कुंडे कार्तिकाष्टम्यां स्नात्वा पूज्यो जनार्द्दनः॥ प्रबोधन्यां यथा प्रीतस्तथा प्रीतस्त
तो भवेत॥ अथाक्रूरतीर्थस्य सौरपुराणे॥ अनंतरं मतिश्रेष्ठं सर्वपापविनाशनं॥ अक्रूरतीर्थमत्यर्थमास्ति प्रि

यतरं हरेः॥ पूर्णिमायां तु यः स्नायात्तत्र तीर्थवरे नरः॥ समुक्त एव संसारात्कार्त्तिकं तु विशेषतः॥ आदिवाराहे॥ तीर्थरा
जं हि चाक्रूरं गुह्यानां गुह्यमुत्तमं॥ तत्फलं समवाप्नोति सर्वतीर्थावगाहनात्॥ अक्रूरे च पुनः स्नात्वा राहुग्रस्ते दिवाकरे
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः॥ अथ भांडागारस्य॥ वाराहे॥ भांडागारमिति ख्यातं गुह्यमस्ति ततो मम॥
लभंते मनुजा भूमि सिद्धिं तत्र न संशयः॥ तत्र कुंडं महाभागे द्रुमगुल्मलतावृतं॥ तत्र स्नानं प्रकुर्वीत अहोरात्रोषितो
नरः॥ लोकं वैद्याधरं गत्वा मोदते क्रतनिश्चयः॥ अत्राश्चर्यं प्रवक्ष्यामि भूमि गुह्यं परं मम॥ चतुर्विंशति द्वादश्यां मम
भक्तिव्यवस्थिताः॥ अर्द्धरात्रिषु अप्सरसंपंति गीतं कस्मि सुखावहं॥ अथ श्रीनंदीश्वरस्य॥ श्रीदशमे॥ पुराणा वत व्रजभु
वो यद्दयंन्नलिंगगूढः पुराणपुरुषो वनचित्रमाल्यः॥ गाः पालयन्सहबलः क्वणयंश्च वेणुं विक्रीडयांच
ति गिरित्ररमार्चितांघ्रिः॥ तथा च पठंति॥ पावने सरसि स्नात्वा कृष्णं नंदीश्वरे गिरौ॥ दृष्ट्वा नंदं यशोदां च सर्वाभीष्टम
वाप्नुयात्॥ शकटारोहणस्य॥ आदिवाराहे॥ शकटारोहणं नाम तस्मिन्क्षेत्रे परं मम॥ मथुरापश्चिमे भागे अर्द्ध
दर्द्धयोजने॥ अनेकानि सहस्राणि भ्रमराणां वसंति वै॥ अत्राभिषेकं कुर्वीत एकरात्रोषितो नरः॥ स तु वैद्याध

रं लोकं गत्वा तु रमते सुखं ॥ अत्रापि महदाश्चर्यं पश्यंति पथि संस्थिताः ॥ सर्वपुष्पवरं कुंदं माघमासे तु द्वादशी ॥ अथ
गृध्रस्नानाचार्यकेतु तीर्थेषु कुरुक्षेत्रवत् अतिदेशः ॥ गोवर्द्धनं तथा क्रूरं द्वे कोटी दक्षिणोत्तरे ॥ पुस्कंदनं च भांडीरं
कुरुक्षेत्रसमानि षट् ॥ अथ पयपार्थकथनं ॥ तत्रैव ॥ असिकुंडं चवैकुंठं कोटितीर्थोत्तमं तथा ॥ अविमुक्तं सोम
तीर्थं संयमनं तिंदुकं तथा ॥ चक्रतीर्थं तथा क्रूरं द्वादशादित्यसंज्ञकं ॥ एते पुराणाः पवित्राश्च महापातकनाशनाः ॥
कुरुक्षेत्राच्छतगुणा मथुरायां न संशयः ॥ ये पठंति महाभागाः शृण्वंति च समाहिताः ॥ मथुरायाश्च माहात्म्यं ते
यांति परमां गतिं ॥ कुलानि ते तारयंति द्वेश ते पक्षयोर्द्वयोः ॥ माहात्म्यश्रवणाद्देव नात्र कार्या विचारणा ॥ माथुरम
हातीर्थानि ॥ विश्रांतिरसिकुंडं च वैकुंठो ध्रुव एव च ॥ कृष्णगंगा चक्रतीर्थं सरस्वत्याश्च संगमः ॥ चतुःसामुद्रिककू
पो गोकर्णारव्य शिवस्तथा ॥ गोवर्द्धनो नंदगृहं वत्सक्रीडनकं तथा ॥ वनानि द्वादश तथा महातीर्थानि माथुरे ॥ अथ
माथुरे देववराः ॥ नारायणानपर्यायः केशवो मध्यसंस्थितः ॥ स्वयंभूश्च पद्मनाभश्चादीर्घविष्णुगतश्रमः ॥ गो
विंदो हरिवाराहो इति माथुरदेवता ॥ ॥ माथुरदेवता ॥ मथुरायास्तु माहात्म्यं सर्वनामामहाद्भुतं ॥ गोपालो नरत
पन्यामन्यदप्यस्ति कीर्तितं ॥ तीर्थान्युक्तानि भूरीणि पुराणेष्वत्र माथुरे ॥ स्थातान्येवाथ नातेषु लिखितानीत्यको